********

*Compiled By Shri N K Venkitaraman.*

********

[ For a free copy of printable PDF file
write to nkv.nvr@gmail.com ]

(All texts have been carefully proof-read. Every effort has been made to ensure that no errors exist in these texts. If you find an error, please report it so that it can be corrected.)

# ॥ श्रीविष्णुसहस्रनामस्तोत्रम् ॥

शुक्लांबरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत् सर्वविघ्नोपशान्तये ॥ १ ॥

यस्य द्विर-दवक्त्राद्याः पारिषद्याः परः शतम् ।
विघ्नं निघ्नन्ति सततं विष्वक्सेनं तमाश्रये ॥ २ ॥

व्यासं वसिष्ठ-नप्तारं शक्तेः पौत्र-मकल्मषम् ।
पराशरात्मजं वन्दे शुकतातं तपोनिधिम् ॥ ३ ॥

व्यासाय विष्णुरूपाय व्यासरूपाय विष्णवे ।
नमो वै ब्रह्मनिधये वासिष्ठाय नमो नमः ॥ ४ ॥

अविकाराय शुद्धाय नित्याय परमात्मने ।
सदैकरूप-रूपाय विष्णवे सर्व-जिष्णवे ॥ ५ ॥

यस्य स्मरणमात्रेण जन्म-संसार-बन्धनात् ।
विमुच्यते नमस्तस्मै विष्णवे प्रभविष्णवे ॥ ६ ॥

ॐ नमो विष्णवे प्रभविष्णवे ।

**श्री वैशम्पायन उवाच ---**

श्रुत्वा धर्मान-शेषेण पावनानि च सर्वशः ।
युधिष्ठिरः शान्त-नवं पुनरेवाभ्य-भाषत ॥ ७ ॥

**श्री युधिष्ठिर उवाच ---**

किमेकं दैवतं लोके किं वाप्येकं परायणम्।
स्तुवन्तः कं कमर्चन्तः प्राप्नुयु-र्मानवाः शुभम्॥८॥

को धर्मः सर्वधर्माणां भवतः परमो मतः।
किं जपन्मुच्यते जन्तु-र्जन्म-संसार-बन्धनात्॥ ९॥

**श्री भीष्म उवाच ---**

जगत्प्रभुं देवदेव-मनन्तं पुरुषोत्तमम्।
स्तुवन् नाम-सहस्रेण पुरुषः सततो-त्थितः॥ १०॥

तमेव चार्चय-न्नित्यं भक्त्या पुरुष-मव्ययम्।
ध्यायन् स्तुवन् नमस्यंश्च यजमानस्त-मेव च॥ ११॥

अनादि-निधनं विष्णुं सर्वलोक-महेश्वरम्।
लोकाध्यक्षं स्तुव-न्नित्यं सर्व-दुःखाति-गो भवेत्॥१२॥

ब्रह्मण्यं सर्व-धर्मज्ञं लोकानां कीर्ति-वर्धनम्।
लोकनाथं महद्भूतं सर्वभूत-भवोद्भवम्॥ १३॥

एष मे सर्व-धर्माणां धर्मोऽधिकतमो मतः।
यद्भक्त्या पुण्डरीकाक्षं स्तवैर-र्चे-न्नरः सदा॥ १४॥

परमं यो महत्तेजः परमं यो महत्तपः।
परमं यो महद्-ब्रह्म परमं यः परायणम्॥ १५॥

पवित्राणां पवित्रं यो मङ्गलानां च मङ्गलम्।
दैवतं देवतानां च भूतानां योऽव्ययः पिता॥ १६॥

यतः सर्वाणि भूतानि भवन्त्यादि-युगागमे ।
यस्मिंश्च प्रलयं यान्ति पुन-रेव युगक्षये ॥ १७ ॥

तस्य लोक-प्रधानस्य जगन्नाथस्य भूपते ।
विष्णोर्नाम-सहस्त्रं मे शृणु पाप-भयापहम् ॥ १८ ॥

यानि नामानि गौणानि विख्यातानि महात्मनः ।
ऋषिभिः परिगीतानि तानि वक्ष्यामि भूतये ॥ १९ ॥

ऋषिर्नाम्नां सहस्त्रस्य वेद-व्यासो महामुनिः ॥
छन्दोऽनुष्टुप् तथा देवो भगवान् देवकी-सुतः ॥ २० ॥

अमृतां-शूद्भवो बीजं शक्ति-र्देवकि-नन्दनः ।
त्रिसामा हृदयं तस्य शान्त्यर्थे विनि-युज्यते ॥ २१ ॥

विष्णुं जिष्णुं महाविष्णुं प्रभविष्णुं महेश्वरम् ॥
अनेकरूप दैत्यान्तं नमामि पुरुषोत्तमं ॥ २२ ॥

## ॥ पूर्वन्यासः ॥

ॐ अस्य श्री विष्णो र्दिव्य सहस्त्र नाम स्तोत्र महा मन्त्रस्य
श्री वेदव्यासो भगवान् ऋषिः । अनुष्टुप् छन्दः ।
श्रीमहाविष्णुः परमात्मा श्रीमन्नारायणो देवता ।
अमृतां-शूद्भवो भानुरिति बीजम् ।
देवकी-नन्दनः स्त्रष्टेति शक्तिः ।
उद्भवः, क्षोभणो देव इति परमो मन्त्रः ।
शङ्ख-भृन्नन्दकी चक्रीति कीलकम् ।

शार्ङ्ग-धन्वा गदा-धर इत्यस्त्रम् ।
रथाङ्गपाणि-रक्षोभ्य इति नेत्रम् ।
त्रिसामा सामगः सामेति कवचम् ।
आनन्दं परब्रह्मेति योनिः ।
ऋतुः सुदर्शनः काल इति दिग्बन्धः ॥
श्री-विश्वरूप इति ध्यानम् ।
श्रीमहाविष्णु-प्रीत्यर्थे सहस्रनाम-जपे विनियोगः ॥

॥ अथ ध्यानम् ।

क्षीरोदन्व-त्प्रदेशे शुचिमणि-विलस-त्सैकते-मौक्ति-कानां
माला-क्लृप्ता-सनस्थः स्फटिक-मणिनिभै-मौक्तिकै-र्मण्डिताङ्गः
शुभ्रै-रभ्रै-रदभ्रै-रुपरि-विरचितै-र्मुक्त-पीयूष वर्षैः
आनन्दी नः पुनीया-दरि-नलिन-गदा शङ्खपाणि-र्मुकुन्दः ॥१ ॥
भूः पादौ यस्य नाभि-र्वियद-सुर-निल-श्चन्द्र सूर्यौ च नेत्रे
कर्णा-वाशाः शिरो द्यौ-र्मुखमपि दहनो यस्य वास्ते-यमब्धिः
अन्तःस्थं यस्य विश्वं सुरनर-खगगो-भोगि-गन्धर्व-दैत्यैः
चित्रं रंरम्यते तं त्रिभुवन वपुषं विष्णुमीशं नमामि ॥ २ ॥
ॐ शान्ताकारं भुजगशयनं पद्मनाभं सुरेशं
विश्वाधारं गगन-सदृशं मेघवर्णं शुभाङ्गम् ।
लक्ष्मीकान्तं कमल-नयनं योगिभि-र्ध्यान-गम्यं
वन्दे विष्णुं भव-भयहरं सर्व-लोकैक-नाथम् ॥ ३ ॥

मेघश्यामं पीतकौशेयवासं श्रीवत्साङ्कं कौस्तुभोद्भासिताङ्गम्
पुण्योपेतं पुण्डरीकायताक्षंविष्णुं वन्दे सर्वलोकैकनाथम् ॥ ४ ॥

नमः समस्त-भूताना-मादि-भूताय भूभृते ।
अनेक-रूप-रूपाय विष्णवे प्रभविष्णवे ॥ ५ ॥

सशङ्खचक्रं सकिरीटकुण्डलं सपीतवस्त्रं सरसीरुहेक्षणम् ।
सहार वक्षःस्थलशशोभिकौस्तुभंनमामि विष्णुंशिरसा चतुर्भुजम् ।

छायायां पारिजातस्य हेम-सिंहासनो-परि
आसीन-मम्बुद-श्याम-मायताक्ष-मलं-कृतम् ।

चन्द्राननं चतुर्बाहुं श्रीवत्साङ्कित वक्षसं
रुक्मिणी सत्य-भामाभ्यां सहितं कृष्णमाश्रये ॥ ७ ॥

**स्तोत्रम्** ॥ ॥ **हरिः ॐ** ॥

विश्वं विष्णु-र्वषट्-कारो भूत-भव्य-भवत्प्रभुः ।
भूत-कृद्-भूत-भृद्-भावो भूतात्मा भूत-भावनः ॥ १ ॥

पूतात्मा परमात्मा च मुक्तानां परमा गतिः ।
अव्ययः पुरुषः साक्षी क्षेत्रज्ञोऽक्षर एव च ॥ २ ॥

योगो योग-विदां नेता प्रधान-पुरुषेश्वरः ।
नारसिंह-वपुः श्रीमान् केशवः पुरुषोत्तमः ॥ ३ ॥

सर्वः शर्वः शिवः स्थाणु-र्भूतादि-र्निधि-रव्ययः ।
संभवो भावनो भर्ता प्रभवः प्रभुरीश्वरः ॥ ४ ॥

स्वयंभूः शम्भु-रादित्यः पुष्कराक्षो महास्वनः ।
अनादि-निधनो धाता विधाता धातु-रुत्तमः ॥ ५ ॥

अप्रमेयो हृषीकेशः पद्मनाभोऽमर-प्रभुः ।
विश्वकर्मा मनु-स्त्वष्टा स्थविष्ठः स्थविरो ध्रुवः ॥ ६ ॥

अग्राह्यः शाश्वतः कृष्णो लोहिताक्षः प्रतर्दनः ।
प्रभूत-स्त्रि-ककु-ब्धाम पवित्रं मङ्गलं परम् ॥ ७ ॥

ईशानः प्राणदः प्राणो ज्येष्ठः श्रेष्ठः प्रजापतिः ।
हिरण्यगर्भो भूगर्भो माधवो मधुसूदनः ॥ ८ ॥

ईश्वरो विक्रमी धन्वी मेधावी विक्रमः क्रमः ।
अनुत्तमो दुराधर्षः कृतज्ञः कृति-रात्मवान् ॥ ९ ॥

सुरेशः शरणं शर्म विश्वरेताः प्रजा-भवः ।
अहः संवत्सरो व्यालः प्रत्ययः सर्व-दर्शनः ॥ १० ॥

अजः सर्वेश्वरः सिद्धः सिद्धिः सर्वादि-रच्युतः ।
वृषा-कपिर-मेयात्मा सर्व-योग-विनिः सृतः ॥ ११ ॥

वसु-र्वसुमनाः सत्यः समात्मा ऽसम्मितः समः ।
अमोघः पुण्डरीकाक्षो वृषकर्मा वृषा-कृतिः ॥ १२ ॥

रुद्रो बहु-शिरा बभ्रु-र्विश्व-योनिः शुचि-श्रवाः ।
अमृतः शाश्वत स्थाणु-र्वरा-रोहो महातपाः ॥ १३ ॥

सर्वगः सर्व-विद्भानु-र्विष्वक्सेनो जनार्दनः ।
वेदो वेद-विद-व्यङ्गो वेदाङ्गो वेदवित् कविः ॥ १४ ॥

लोकाध्यक्षः सुराध्यक्षो धर्माध्यक्षः कृता-कृतः ।
चतु-रात्मा चतु-र्व्यूह-श्चतु-र्दंष्ट्र-श्चतु-र्भुजः ॥ १५ ॥

भ्रा-जिष्णु-र्भोजनं भोक्ता सहिष्णु-र्जगदा-दिजः ।
अनघो विजयो जेता विश्व-योनिः पुनर्वसुः ॥ १६ ॥

उपेन्द्रो वामनः प्रांशु–रमोघः शुचि-रूर्जितः ।
अतीन्द्रः संग्रहः सर्गो धृतात्मा नियमो यमः ॥ १७ ॥

वेद्यो वैद्यः सदा-योगी वीरहा माधवो मधुः ।
अतीन्द्रियो महामायो महोत्साहो महाबलः ॥ १८ ॥

महा-बुद्धि-र्महा-वीर्यो महा-शक्ति-र्महा-द्युतिः ।
अनि-र्देश्य-वपुः श्रीमान्–अमेयात्मा महा-द्रि-धृक् ॥ १९ ॥

महे-ष्वासो मही-भर्ता श्रीनिवासः सतां गतिः ।
अनिरुद्धः सुरानन्दो गोविन्दो गोविदां पतिः ॥ २० ॥

मरीचिर्द-मनो हंसः सुपर्णो भुज-गोत्तमः ।
हिरण्य-नाभः सुतपाः, पद्मनाभः प्रजापतिः ॥ २१ ॥

अमृत्युः सर्व-दृक् सिंहः सन्धाता सन्धिमान् स्थिरः ।
अजो दुर्मर्षणः शास्ता विश्रुतात्मा सुरारिहा ॥ २२ ॥

गुरु-र्गुरु-तमो धाम सत्यः सत्य-पराक्रमः ।
निमिषोऽनिमिषः स्रग्वी वाचस्पति-रुदा-रधीः ॥ २३ ॥

अग्रणी-र्ग्रामणीः श्रीमान् न्यायो नेता समीरणः ।
सहस्र-मूर्धा विश्वात्मा सहस्राक्षः सहस्रपात् ॥ २४ ॥

आवर्तनो निवृत्तात्मा संवृतः सं-प्रमर्दनः ।
अहः सं-वर्तको वह्निर्-अनिलो धरणीधरः ॥ २५ ॥

सुप्रसादः प्रसन्नात्मा विश्व-धृ-ग्विश्व-भु-ग्विभुः ।
सत्कर्ता सत्कृतः साधु-र्जह्नु-र्नारायणो नरः ॥ २६ ॥

असंख्ये-यो-ऽप्रमे-यात्मा विशिष्टः शिष्ट-कृच्छु-चिः ।
सिद्धार्थः सिद्ध-संकल्पः सिद्धि-दः सिद्धि-साधनः ॥२७ ॥

वृषाही वृषभो विष्णु-र्वृष-पर्वा वृषो-दरः ।
वर्धनो वर्धमानश्च विविक्तः श्रुति-सागरः ॥ २८ ॥

सु-भुजो दुर्धरो वाग्मी महेन्द्रो वसु-दो वसुः ।
नैकरूपो बृह-द्रूपः शिपि-विष्टः प्रकाशनः ॥ २९ ॥

ओज-स्तेजो-द्युति-धरः प्रकाशात्मा प्रतापनः ।
ऋद्धः स्पष्टा-क्षरो मन्त्र-श्चन्द्रांशु-र्भास्कर-द्युतिः ॥३० ॥

अमृतां-शूद्भवो भानुः शश-बिन्दुः सुरेश्वरः ।
औषधं जगतः सेतुः सत्य-धर्म-पराक्रमः ॥ ३१ ॥

भूतभव्य-भवन्नाथः पवनः पावनोऽनलः ।
कामहा काम-कृ-त्कान्तः कामः काम-प्रदः प्रभुः ॥ ३२ ॥

युगादि-कृ-द्युगा-वर्तो नैक-मायो महाशनः ।
अ-दृश्यो व्यक्त-रूपश्च सहस्र-जिद-नन्त-जित् ॥ ३३ ॥

इष्टो-ऽविशिष्टः शिष्टेष्टः शिखण्डी नहुषो वृषः ।
क्रोधहा क्रोध-कृ-त्कर्ता विश्व-बाहु-र्मही-धरः ॥ ३४ ॥

अच्युतः प्रथितः प्राणः प्राणदो वास-वानुजः ।
अपां-निधिर-धिष्ठान-मप्र-मत्तः प्रतिष्ठितः ॥ ३५ ॥

स्कन्दः स्कन्द-धरो धुर्यो वरदो वायु-वाहनः ।
वासुदेवो बृहद्भानु रादि-देवः पुरन्दरः ॥ ३६ ॥

अशोक-स्तारण-स्तारः शूरः शौरि-र्जनेश्वरः ।
अनुकूलः शतावर्तः पद्मी पद्म-निभेक्षणः ॥ ३७ ॥

पद्मनाभोऽरविन्दाक्षः पद्म-गर्भः शरीर-भृत् ।
महर्द्धि र्ऋद्धो वृद्धात्मा महा-क्षो गरुड-ध्वजः ॥ ३८ ॥

अतुलः शरभो भीमः सम-यज्ञो हवि-र्हरिः ।
सर्वलक्षण -लक्षण्यो लक्ष्मीवान् स-मिति-ञ्जयः ॥ ३९ ॥

विक्षरो रोहितो मार्गो हेतु-र्दामोदरः सहः।
मही-धरो महा-भागो वेग-वान-मिताशनः॥ ४० ॥

उद्भवः क्षोभणो देवः श्री-गर्भः परमेश्वरः।
करणं कारणं कर्ता विकर्ता गहनो गुहः॥ ४१ ॥

व्यवसायो व्यवस्थानः संस्थानः स्थानदो ध्रुवः।
परर्द्धिः परम-स्पष्ट स्तुष्टः पुष्टः शुभेक्षणः॥ ४२ ॥

रामो विरामो विरतो मार्गो नेयो नयोऽनयः।
वीरः शक्ति-मतां श्रेष्ठो धर्मो धर्म-विदुत्तमः॥ ४३ ॥

वैकुण्ठः पुरुषः प्राणः प्राणदः प्रणवः पृथुः।
हिरण्यगर्भः शत्रुघ्नो व्याप्तो वायु-रधो-क्षजः॥ ४४ ॥

ऋतुः सुदर्शनः कालः परमेष्ठी परिग्रहः।
उग्रः संवत्सरो दक्षो विश्रामो विश्व-दक्षिणः॥ ४५ ॥

विस्तारः स्थावर-स्थाणुः प्रमाणं बीज-मव्ययम्।
अर्थोऽनर्थो महा-कोशो महा-भोगो महा-धनः॥ ४६ ॥

अनि-र्विण्णः स्थविष्ठोऽभू र्धर्म-यूपो महा-मखः।
नक्षत्र-नेमि-र्नक्षत्री क्षमः, क्षामः समीहनः॥ ४७ ॥

यज्ञ इज्यो महे-ज्यश्च क्रतुः सत्रं सतां गतिः।
सर्व-दर्शी वि-मुक्ता-त्मा सर्वज्ञो ज्ञान-मुत्तमम्॥ ४८ ॥

सु-व्रतः सु-मुखः सूक्ष्मः सु-घोषः सुख-दः सु-हृत् ।
मनोहरो जित-क्रोधो वीर-बाहु-र्विदारणः ॥ ४९ ॥

स्वापनः स्व-वशो व्यापी नैकात्मा नैक-कर्म-कृत् ।
वत्सरो वत्सलो वत्सी रत्न-गर्भो धनेश्वरः ॥ ५० ॥

धर्म-गु-ब्धर्म-कृ-द्धर्मी सद-सत्क्षर-मक्षरम् ।
अविज्ञाता सहस्रांशु-र्विधाता कृत-लक्षणः ॥ ५१ ॥

गभस्ति-नेमिः सत्त्वस्थः सिंहो भूत-महेश्वरः ।
आदि-देवो महादेवो देवेशो देव-भृद्-गुरुः ॥ ५२ ॥

उत्तरो गोपति-र्गोप्ता ज्ञान-गम्यः पुरातनः ।
शरीर-भूत-भृद्-भोक्ता कपीन्द्रो भूरि-दक्षिणः ॥ ५३ ॥

सोमपो-ऽमृत-पः सोमः पुरुजि-त्पुरु-सत्तमः ।
विनयो जयः सत्य-संधो दाशा-र्हः सात्त्वतां-पतिः ॥५४ ॥

जीवो विनयिता साक्षी मुकुन्दोऽमित-विक्रमः ।
अम्भो-निधिर-नन्तात्मा महो-दधिशयो-ऽन्तकः ॥ ५५ ॥

अजो महार्हः स्वाभाव्यो जिता-मित्रः प्रमोदनः ।
आनन्दो नन्दनो नन्दः सत्य-धर्मा त्रि-विक्रमः ॥ ५६ ॥

महर्षिः कपिला-चार्यः कृतज्ञो मेदिनी-पतिः ।
त्रि-पद-स्त्रि-दशा-ध्यक्षो महा-शृङ्गः कृतान्त-कृत् ॥ ५७ ॥

महा-वराहो गोविन्दः सुषेणः कनका-ङ्गदी ।
गुह्यो गभीरो गहनो गुप्त-श्चक्र-गदाधरः ॥ ५८ ॥

वेधाः स्वाङ्गो-ऽजितः कृष्णो दृढः संकर्षणो-ऽच्युतः ।
वरुणो वारुणो वृक्षः पुष्कराक्षो महा-मनाः ॥ ५९ ॥

भगवान् भग-हाऽऽनन्दी वनमाली हलायुधः ।
आदित्यो ज्योति-रादित्यः सहिष्णु-र्गति-सत्तमः ॥६० ॥

सुधन्वा खण्ड-परशु र्दारुणो द्रविण-प्रदः ।
दिवः स्पृक् सर्व-दृग्-व्यासो वाचस्पति-रयो-निजः ॥ ६१ ॥

त्रिसामा साम-गः साम निर्वाणं भेषजं भिषक् ।
संन्यास-कृच्छ-मः शान्तो निष्ठा शान्तिः परायणम् ॥ ६२ ॥

शुभाङ्गः शान्ति-दः स्रष्टा कुमुदः कुवले-शयः ।
गोहितो गोपति-र्गोप्ता वृष-भाक्षो वृष-प्रियः ॥ ६३ ॥

अ-नि-वर्ती नि-वृत्तात्मा संक्षेप्ता क्षेम-कृच्छि-वः ।
श्री-वत्स-वक्षाः श्रीवासः श्रीपतिः श्रीमतां-वरः ॥ ६४ ॥

श्रीदः श्रीशः श्रीनिवासः श्रीनिधिः श्री-विभावनः ।
श्रीधरः श्रीकरः श्रेयः श्रीमान्-ल्लोक-त्रया-श्रयः ॥ ६५ ॥

स्वक्षः स्वङ्गः शतानन्दो नन्दि-र्ज्योति-र्गणेश्वरः ।
विजितात्मा-ऽविधे-यात्मा स-त्कीर्ति-श्छिन्न-संशयः ॥६६ ॥

उदीर्णः सर्वत-श्चक्षु र-नीशः शाश्वत-स्थिरः ।
भूशयो भूषणो भूति-र्विशोकः शोक-नाशनः ॥ ६७ ॥

अर्चिष्मा-नर्चितः कुम्भो विशुद्धात्मा विशोधनः ।
अनिरुद्धो ऽप्रति-रथः प्रद्युम्नो ऽमित-विक्रमः ॥ ६८ ॥

कालनेमि-निहा वीरः शौरिः शूर-जनेश्वरः ।
त्रिलोकात्मा त्रिलोकेशः केशवः केशि-हा हरिः ॥ ६९ ॥

कामदेवः कामपालः कामी कान्तः कृता-गमः ।
अनि-र्देश्य-वपु-र्विष्णु-र्वीरो ऽनन्तो धनंजयः ॥ ७० ॥

ब्रह्मण्यो ब्रह्म-कृद् ब्रह्मा ब्रह्म ब्रह्म-विवर्धनः ।
ब्रह्मविद् ब्राह्मणो ब्रह्मी ब्रह्मज्ञो ब्राह्मण-प्रियः ॥ ७१ ॥

महाक्रमो महाकर्मा महातेजा महो-रगः ।
महाक्रतु-र्महा-यज्वा महायज्ञो महा-हविः ॥ ७२ ॥

स्तव्यः स्तव-प्रियः स्तोत्रं स्तुतिः स्तोता-रण-प्रियः ।
पूर्णः पूरयिता पुण्यः पुण्य-कीर्ति-रना-मयः ॥ ७३ ॥

मनोजव-स्तीर्थ-करो वसु-रेता वसु-प्रदः ।
वसुप्रदो वासुदेवो वसु-र्वसुमना हविः ॥ ७४ ॥

सद्-गतिः सत्कृतिः सत्ता सद्-भूतिः सत्परायणः ।
शूर-सेनो यदु-श्रेष्ठः सन्निवासः सुया-मुनः ॥ ७५ ॥

भूतावासो वासुदेवः सर्वासु-निलयोऽनलः ।
दर्पहा दर्पदो दृप्तो दुर्धरोऽथा-पराजितः ॥ ७६ ॥
विश्वमूर्ति-र्महामूर्ति-र्दीप्त-मूर्तिर-मूर्तिमान् ।
अनेकमूर्ति-रव्यक्तः शत-मूर्तिः शताननः ॥ ७७ ॥
एको नैकः सवः कः-किं यत्-तत्पद-म-नुत्तमम् ।
लोकबन्धु-र्लोकनाथो माधवो भक्त-वत्सलः ॥ ७८ ॥
सुवर्ण-वर्णो हेमाङ्गो वराङ्ग-श्चन्दना-ङ्गदी ।
वीरहा विषमः शून्यो घृता-शीर-चल-श्चलः ॥ ७९ ॥
अमानी मानदो मान्यो लोक-स्वामी त्रिलोक-धृक् ।
सुमेधा मेधजो धन्यः सत्य-मेधा धराधरः ॥ ८० ॥
तेजो-वृषो द्युति-धरः सर्व-शस्त्र-भृतां वरः ।
प्र-ग्रहो नि-ग्रहो व्यग्रो नैक-क्षृङ्गो गदा-ग्रजः ॥ ८१ ॥
चतु-र्मूर्ति-श्चतु-र्बाहु-श्चतु-र्व्यूह-श्चतु-र्गतिः ।
चतु-रात्मा चतु-र्भाव-श्चतु-र्वेद-विदेक-पात् ॥ ८२ ॥
समावर्तो-ऽनिवृत्तात्मा दुर्जयो दुरति-क्रमः ।
दुर्लभो दुर्गमो दुर्गो दुरा-वासो दुरा-रिहा ॥ ८३ ॥
शुभाङ्गो लोक-सारङ्गः सु-तन्तु-स्तन्तु-वर्धनः ।
इन्द्रकर्मा महाकर्मा कृत-कर्मा कृता-गमः ॥ ८४ ॥

उद्भवः सुन्दरः सुन्दो रत्न-नाभः सुलोचनः ।
अर्को वाज-सनः शृङ्गी जयन्तः सर्व-विज्जयी ॥ ८५ ॥

सुवर्ण-बिन्दु-रक्षोभ्यः सर्व-वागी-श्वरे-श्वरः ।
महा-ह्रदो महा-गर्तो महा-भूतो महा-निधिः ॥ ८६ ॥

कुमुदः कुन्दरः कुन्दः पर्जन्यः पावनो-ऽनिलः ।
अमृतां-शो-ऽमृत-वपुः सर्वज्ञः सर्वतो-मुखः ॥ ८७ ॥

सुलभः सुव्रतः सिद्धः शत्रु-जि-च्छत्रु-तापनः ।
न्यग्रो-धो-ऽदुम्बरो ऽश्वत्थ-श्चाणूरा-न्ध्र-निषूदनः ॥८८ ॥

सहस्रा-र्चिः सप्त-जिह्वः सप्तै-धाः सप्त-वाहनः ।
अमूर्ति-रनघो-ऽचिन्त्यो भय-कृद्-भय-नाशनः ॥ ८९ ॥

अणु-र्बृह-त्कृशः स्थूलो गुण-भृ-न्निर्गुणो महान् ।
अ-धृतः स्व-धृतः स्वास्यः प्राग्-वंशो वंश-वर्धनः ॥ ९० ॥

भार-भृत् कथितो योगी योगीशः सर्व-कामदः ।
आश्रमः श्रमणः क्षामः सुपर्णो वायु-वाहनः ॥ ९१ ॥

धनुर्धरो धनुर्वेदो दण्डो दमयिता दमः ।
अपराजितः सर्व-सहो नियन्ता ऽनियमो-ऽयमः ॥ ९२ ॥

सत्त्व-वान् सात्त्विकः सत्यः सत्यधर्म-परायणः ।
अभिप्रायः प्रियार्होऽर्हः प्रिय-कृत् प्रीति-वर्धनः ॥ ९३ ॥

विहायस-गति-ज्योंतिः सुरुचि-र्हुत-भुग्-विभुः ।
रवि-र्विरोचनः सूर्यः सविता रवि-लोचनः ॥ ९४ ॥

अनन्तो हुत-भुग्-भोक्ता सुखदो नैकजोऽग्रजः ।
अनि-र्विण्णः सदामर्षी लोकाधिष्ठान-मद्भुतः ॥ ९५ ॥

सना-त्सना-तन-तमः कपिलः कपि-रव्ययः ।
स्वस्तिदः स्वस्ति-कृत्स्वस्ति स्वस्ति-भुक्स्वस्ति-दक्षिणः ॥

अरौद्रः कुण्डली चक्री विक्र-म्यूर्जित-शासनः ।
शब्दा-तिगः शब्द-सहः शिशिरः शर्वरी-करः ॥ ९७ ॥

अक्रूरः पेशलो दक्षो दक्षिणः क्षमिणां-वरः ।
विद्वत्तमो वीत-भयः पुण्य-श्रवण-कीर्तनः ॥ ९८ ॥

उत्तारणो दुष्कृतिहा पुण्यो दुःस्वप्न-नाशनः ।
वीरहा रक्षणः सन्तो जीवनः पर्यव-स्थितः ॥ ९९ ॥

अनन्त-रूपोऽनन्तश्री-र्जित-मन्यु-र्भयापहः ।
चतुरश्रो गभी-रात्मा विदिशो व्यादिशो दिशः ॥ १०० ॥

अनादि-र्भू-र्भुवो लक्ष्मीः सुवीरो रुचिरा-ङ्गदः ।
जननो जन-जन्मादि-र्भीमो भीम-पराक्रमः ॥ १०१ ॥

आधार-निलयोऽधाता पुष्पहासः प्रजागरः ।
ऊर्ध्वगः सत्पथाचारः प्राणदः प्रणवः पणः ॥ १०२ ॥

प्रमाणं प्राण-निलयः प्राण-भृ-त्प्राण-जीवनः ।
तत्त्वं तत्त्व-विदेकात्मा जन्ममृत्यु-जरा-तिगः ॥ १०३ ॥

भूर्भुवः स्वस्त-रुस्तारः सविता प्रपिता-महः ।
यज्ञो यज्ञ-पति-र्यज्वा यज्ञाङ्गो यज्ञ-वाहनः ॥ १०४ ॥

यज्ञ-भृद् यज्ञ-कृद् यज्ञी यज्ञ-भुग् यज्ञ-साधनः ।
यज्ञान्त-कृद् यज्ञ-गुह्य मन्न-मन्नाद एव च ॥ १०५ ॥

आत्म-योनिः स्वयं-जातो वैखानः साम-गायनः ।
देवकी-नन्दनः स्रष्टा क्षिती-शः पाप-नाशनः ॥ १०६ ॥

शङ्ख-भृ-न्नन्दकी चक्री शार्ङ्ग-धन्वा गदाधरः ।
रथाङ्गपाणि-रक्षोभ्यः सर्व-प्रहरणा-युधः ॥ १०७ ॥

सर्व-प्रहरणा-युध ॐ नम इति ।

वनमाली गदी शार्ङ्गी शङ्खी चक्री च नन्दकी ।
श्रीमान् नारायणो विष्णुर्वासुदेवोऽभिरक्षतु ॥ १०८ ॥

श्री वासुदेवोऽभिरक्षतु ॐ नम इति ।

**॥ उत्तरन्यासः ॥**

**श्री भीष्म उवाच ---**

इती-दं कीर्तनी-यस्य केशवस्य महात्मनः ।
नाम्नां सहस्रं दिव्याना-मशेषेण प्र-कीर्तितम् ॥ १ ॥

य इदं शृणुया-न्नित्यं यश्चा-पि परि-कीर्तयेत् ।
ना-शुभं प्राप्नुया-त्किंचि-त्सोऽमुत्रे-ह च मानवः ॥ २ ॥

वेदान्त-गो ब्राह्मणः स्यात् क्षत्रियो विजयी भवेत् ।
वैश्यो धन-समृद्धः स्या च्छूद्रः सुख-म-वाप्नुयात् ॥ ३ ॥

धर्मा-र्थी प्राप्नुया-द्धर्म मर्था-र्थी चार्थ-माप्नुयात् ।
कामा-न-वाप्नुया-त्कामी प्रजा-र्थी प्राप्नुया-त्प्रजाम् ॥ ४ ॥

भक्तिमान् यः सदो-त्थाय शुचि-स्तद्-गत-मानसः ।
सहस्रं वासुदेवस्य नाम्ना-मेतत्-प्र-कीर्तयेत् ॥ ५ ॥

यशः प्राप्नोति विपुलं ज्ञाति-प्राधान्य-मेव च ।
अचलां श्रियमाप्नोति श्रेयः प्राप्नोत्य-नुत्तमम् ॥ ६ ॥

न भयं क्वचि-दाप्नोति वीर्यं तेजश्च विन्दति ।
भवत्य-रोगो द्युतिमान् बल-रूप-गुणान्वितः ॥ ७ ॥

रोगार्तो मुच्यते रोगाद् बद्धो मुच्येत बन्धनात् ।
भया-न्मुच्येत भीतस्तु मुच्ये-तापन्न आपदः ॥ ८ ॥

दुर्गाण्य-तितर-त्याशु पुरुषः पुरुषोत्तमम् ।
स्तुवन्नाम-सहस्रेण नित्यं भक्ति-समन्वितः ॥ ९ ॥

वासुदेवा-श्रयो मर्त्यो वासुदेव-परायणः ।
सर्व-पाप-विशुद्धा-त्मा याति ब्रह्म सनातनम् ॥ १० ॥

न वासुदेव-भक्ता-ना मशुभं विद्यते क्वचित् ।
जन्ममृत्यु-जरा-व्याधि भयं नैवोप-जायते ॥ ११ ॥

इमं स्तव-मधीयानः श्रद्धा-भक्ति-समन्वितः ।
युज्येता-त्म-सुख-क्षान्ति श्री-धृति-स्मृति-कीर्तिभिः ॥ १२

न क्रोधो न च मात्सर्यं न लोभो ना-शुभा मतिः ।
भवन्ति कृत पुण्यानां भक्तानां पुरुषोत्तमे ॥ १३ ॥

द्यौः स-चन्द्रार्क-नक्षत्रा खं दिशो भू-र्महो-दधिः ।
वासुदेवस्य वीर्येण विधृतानि महात्मनः ॥ १४ ॥

स-सुरा-सुर-गन्धर्वं स-यक्षो-रग-राक्षसम् ।
जग-द्वशे वर्तते-दं कृष्णस्य स-चरा-चरम् ॥ १५ ॥

इन्द्रियाणि मनो बुद्धिः सत्त्वं तेजो बलं धृतिः ।
वासुदेवा-त्मका-न्याहुः क्षेत्रं क्षेत्र-ज्ञ एव च ॥ १६ ॥

सर्वा-गमाना-माचारः प्रथमं परि-कल्पते ।
आचार-प्रभवो धर्मो धर्मस्य प्रभु-रच्युतः ॥ १७ ॥

ऋषयः पितरो देवा महा-भूतानि धातवः ।
जङ्गमा-जङ्गमं चेदं जग-न्नारायणोद्-भवम् ॥ १८ ॥

योगो ज्ञानं तथा सांख्यं विद्याः शिल्पादि कर्म च ।
वेदाः शास्त्राणि विज्ञान-मेत-त्सर्वं जनार्दनात् ॥ १९ ॥

एको विष्णु-र्महद्भूतं पृथग्-भूता-न्य-नेकशः ।
त्रींल्लोकान्-व्याप्य भूतात्मा भुङ्क्ते विश्व-भुग-व्ययः ॥ २० ॥
इमं स्तवं भगवतो विष्णो र्व्यासेन कीर्तितम् ।
पठेद्य इच्छे-त्पुरुषः श्रेयः प्राप्तुं सुखा-नि च ॥ २१ ॥
विश्वे-श्वर-मजं देवं जगतः प्रभु-मव्ययम् ।
भजन्ति ये पुष्करा-क्षं न ते यान्ति पराभवम् ॥ २२ ॥
न ते यान्ति पराभवम् ॐ नम इति ।

**श्री अर्जुन उवाच ---**

पद्म-पत्र-विशालाक्ष पद्मनाभ सुरोत्तम ।
भक्ताना-मनु-रक्तानां त्राता भव जनार्दन ॥ २३ ॥

**श्री भगवानुवाच ---**

यो मां नाम-सहस्रेण स्तोतु-मिच्छति पाण्डव ।
सोह-ऽमेकेन श्लोकेन स्तुत एव न संशयः ॥ २४ ॥
स्तुत एव न संशय ॐ नम इति ।

**श्री व्यास उवाच ---**

वासना-द्वासु-देवस्य वासितं भुवन-त्रयम् ।
सर्वभूत-निवासो-ऽसि वासुदेव नमोऽस्तु ते ॥ २५ ॥
श्री वासुदेव नमोऽस्तुत ॐ नम इति ।

**श्री पार्वत्युवाच ---**

केनोपा-येन लघुना विष्णो-र्नाम-सहस्रकम् ।
पठ्यते पण्डितै-र्नित्यं श्रोतु-मिच्छाम्य-हं प्रभो ॥ २६ ॥

**श्री ईश्वर उवाच ---**

श्रीराम राम रामेति रमे रामे मनोरमे ।
सहस्रनाम तत्तुल्यं राम नाम वरानने ॥ २७ ॥
श्रीरामनाम वरानन ॐ नम इति ।

**श्री ब्रह्मोवाच ---**

नमोऽस्त्व-नन्ताय सहस्र-मूर्तये
सहस्र-पादाक्षि-शिरो-रु-बाहवे ।
सहस्र-नाम्ने पुरुषाय शाश्वते-
सहस्रकोटी युग-धारिणे नमः ॥ २८ ॥
सहस्रकोटी युगधारिणे ॐ नम इति ।

**श्री सञ्जय उवाच ---**

यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।
तत्र श्री-र्विजयो भूति-र्ध्रुवा नीति-र्मति-र्मम ॥ २९ ॥

**श्री भगवानुवाच ---**

अनन्या-श्चिन्त-यन्तो मां ये जनाः पर्यु-पासते ।
तेषां नित्याभि-युक्तानां योगक्षेमं वहाम्यहम् ॥ ३० ॥

परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्म-संस्थापना-र्थाय संभवामि युगे युगे ॥ ३१ ॥

आर्ताः विष-ण्णाः शिथिला-श्च भीताः
घोरे-षु च व्याधि-षु वर्तमानाः ।
संकीर्त्य नारायण-शब्दमात्रं
विमुक्त-दुःखाः सुखिनो भवन्तु ॥ ३२ ॥

कायेन वाचा मनसेंद्रियैर्वा
बुद्ध्यात्मना वा प्रकृतिस्वभावात् ।
करोमि यद्यत् सकलं परस्मै
नारायणायेति समर्पयामि ॥ ३३ ॥

॥ इति श्रीविष्णोर्दिव्यसहस्रनामस्तोत्रं संपूर्णम् ॥

॥ ॐ तत् सत् ॥

## Additional Concluding Shlokas

ॐ आपदामपहर्तारं दातारं सर्वसंपदाम् ।
लोकाभिरामं श्रीरामं भूयो भूयो नमाम्यहम् ॥
आर्तानामार्तिहन्तारं भीतानां भीतिनाशनम् ।
द्विषतां कालदण्डं तं रामचन्द्रं नमाम्यहम् ॥
नमः कोदण्ड-हस्ताय सन्धीकृत-शराय च ।
खण्डिताखिल-दैत्याय रामायऽऽपन्निवारिणे ॥
रामाय रामभद्राय रामचंद्राय वेधसे ।
रघुनाथाय नाथाय सीतायाः पतये नमः ॥
अग्रतः पृष्ठत-श्चैव पार्श्व-तश्च महाबलौ ।
आकर्ण-पूर्ण-धन्वानौ रक्षेतां रामलक्ष्मणौ ॥
सन्नद्धः कवची खड्गी चापबाण-धरो युवा ।
गच्छन् ममाग्रतो नित्यं रामः पातु स-लक्ष्मणः ॥
अच्युतानन्त-गोविन्द नामोच्चारण-भेषजात् ।
नश्यन्ति सकला रोगा-स्सत्यं सत्यं वदाम्यहम् ॥
सत्यं सत्यं पुन-स्सत्य-मुद्धृत्य भुज-मुच्यते ।
वेदा-च्छास्त्रं परं नास्ति न देवं केशवा-त्परम् ॥
शरीरे जर्झरी-भूते व्याधि-ग्रस्ते कळेवरे ।

औषधं जाह्नवीतोयं वैद्यो नारायणो हरिः ॥
आलोड्य सर्व-शास्त्राणि विचार्य च पुनः पुनः ।
इदमेकं सुनिष्पन्नं ध्येयो नारायणो हरिः ॥
यदक्षरपदभ्रष्टं मात्राहीनं तु यद्भवेत् ।
तत्सर्वं क्षम्यतां देव नारायण नमोऽस्तु ते ॥
विसर्ग-बिन्दु-मात्राणि पद-पादाक्षराणि च ।
न्यूनानि चातिरिक्तानि क्षमस्व पुरुषोत्तम ॥

## Alternate Concluding Shlokas

नमः कमलनाभाय नमस्ते जलशायिने ।
नमस्ते केशवानन्त वासुदेव नमोऽस्तुते ॥
नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च ।
जगद्धिताय कृष्णाय गोविंदाय नमो नमः ॥
आकाशात्पतितं तोयं यथा गच्छति सागरम् ।
सर्वदेवनमस्कारः केशवं प्रति गच्छति ॥
एष निष्कंटकः पन्था यत्र संपूज्यते हरिः ।
कुपथं तं विजानीयाद् गोविन्द-रहितागमम् ॥
सर्ववेदेषु यत्पुण्यं सर्व-तीर्थेषु यत्फलम् ।
तत्फलं सम-वाप्नोति स्तुत्वा देवं जनार्दनम् ॥

यो नरः पठते नित्यं त्रिकालं केशवालये ।
द्विकाल-मेककालं वा क्रूरं सर्वं व्यपोहति ॥
दह्यन्ते रिप-वस्तस्य सौम्याः सर्वे सदा ग्रहाः ।
विलीयन्ते च पापानि स्तवे ह्यस्मिन् प्रकीर्तिते ॥
येने ध्यातः श्रुतो येन येनायं पठ्यते स्तवः ।
दत्तानि सर्व-दानानि सुराः सर्वे समर्चिताः ॥
इह लोके परे वापि न भयं विद्यते क्वचित् ।
नाम्नां सहस्त्रं योऽधीते द्वादश्यां मम सन्निधौ ॥
शनैर्दहन्ति पापानि कल्पकोटि-शतानि च ।
अश्वत्थ-सन्निधौ पार्थ ध्यात्वा मनसि केशवम् ॥
पठेन्नाम-सहस्त्रं तु गवां कोटिफलं लभेत् ।
शिवालये पठेनित्यं तुलसी-वन-संस्थितः ॥
नरो मुक्तिमवाप्नोति चक्रपाणे-र्वचो यथा ।
ब्रह्म-हत्यादिकं घोरं सर्वपापं विनश्यति ॥
विलयं यान्ति पापानि चान्य-पापस्य का कथा ।
सर्वपापवि-निर्मुक्तो विष्णु-लोकं स गच्छति ॥

॥ हरिः ॐ तत्सत् ॥

# विष्णुसहस्रनामावली

॥ ध्यानम् ॥

शांताकारं भुजगशयनं पद्मनाभं सुरेशं
विश्वाधारं गगनसदृशं मेघवर्णं शुभाङ्गम् ।
लक्ष्मीकान्तं कमलनयनं योगिभिर्ध्यानगम्यं
वंदे विष्णुं भवभयहरं सर्वलोकैकनाथम् ॥

ॐ विश्वस्मै नमः ।
ॐ विष्णवे नमः ।
ॐ वषट्काराय नमः ।
ॐ भूतभव्य-भवत्प्रभवे नमः ।
ॐ भूतकृते नमः ।
ॐ भूतभृते नमः ।
ॐ भावाय नमः ।
ॐ भूतात्मने नमः ।
ॐ भूत-भावनाय नमः ।
ॐ पूतात्मने नमः । [10]
ॐ परमात्मने नमः ।
ॐ मुक्तानां परमगतये नमः ।
ॐ अव्ययाय नमः ।
ॐ पुरुषाय नमः ।
ॐ साक्षिणे नमः ।
ॐ क्षेत्रज्ञाय नमः ।
ॐ अक्षराय नमः ।
ॐ योगाय नमः ।
ॐ योगविदां नेत्रे नमः ।
ॐ प्रधान-पुरुषेश्वराय नमः । [20]
ॐ नारसिंह-वपुषे नमः ।
ॐ श्रीमते नमः ।
ॐ केशवाय नमः ।
ॐ पुरुषोत्तमाय नमः ।
ॐ सर्वस्मै नमः ।
ॐ शर्वाय नमः ।
ॐ शिवाय नमः ।
ॐ स्थाणवे नमः ।
ॐ भूतादये नमः ।
ॐ निधये अव्ययाय नमः । [30]

ॐ सम्भवाय नमः।
ॐ भावनाय नमः।
ॐ भर्त्रे नमः।
ॐ प्रभवाय नमः।
ॐ प्रभवे नमः।
ॐ ईश्वराय नमः।
ॐ स्वयम्भुवे नमः।
ॐ शम्भवे नमः।
ॐ आदित्याय नमः।
ॐ पुष्कराक्षाय नमः। [40]
ॐ महास्वनाय नमः।
ॐ अनादि-निधनाय नमः।
ॐ धात्रे नमः।
ॐ विधात्रे नमः।
ॐ धातु-रुत्तमाय नमः।
ॐ अप्रमेयाय नमः।
ॐ हृषीकेशाय नमः।
ॐ पद्मनाभाय नमः।
ॐ अमर-प्रभवे नमः।
ॐ विश्वकर्मणे नमः। [50]
ॐ मनवे नमः।

ॐ त्वष्ट्रे नमः।
ॐ स्थविष्ठाय नमः।
ॐ स्थविराय ध्रुवाय नमः।
ॐ अग्रह्याय नमः।
ॐ शाश्वताय नमः।
ॐ कृष्णाय नमः।
ॐ लोहिताक्षाय नमः।
ॐ प्रतर्दनाय नमः।
ॐ प्रभूताय नमः। [60]
ॐ त्रिक-कुब्धाम्ने नमः।
ॐ पवित्राय नमः।
ॐ मङ्गलाय परस्मै नमः।
ॐ ईशानाय नमः।
ॐ प्राणदाय नमः।
ॐ प्राणाय नमः।
ॐ ज्येष्ठाय नमः।
ॐ श्रेष्ठाय नमः।
ॐ प्रजापतये नमः।
ॐ हिरण्यगर्भाय नमः। [70]
ॐ भूगर्भाय नमः।
ॐ माधवाय नमः।

ॐ मधुसूदनाय नमः।
ॐ ईश्वराय नमः।
ॐ विक्रमिणे नमः।
ॐ धन्विने नमः।
ॐ मेधाविने नमः।
ॐ विक्रमाय नमः।
ॐ क्रमाय नमः।
ॐ अनुत्तमाय नमः। [80]
ॐ दुराधर्षाय नमः।
ॐ कृतज्ञाय नमः।
ॐ कृतये नमः।
ॐ आत्मवते नमः।
ॐ सुरेशाय नमः।
ॐ शरणाय नमः।
ॐ शर्मणे नमः।
ॐ विश्वरेतसे नमः।
ॐ प्रजाभवाय नमः।
ॐ अन्हे नमः। [90]
ॐ संवत्सराय नमः।
ॐ व्यालाय नमः।
ॐ प्रत्ययाय नमः।

ॐ सर्वदर्शनाय नमः।
ॐ अजाय नमः।
ॐ सर्वेश्वराय नमः।
ॐ सिद्धाय नमः।
ॐ सिद्धये नमः।
ॐ सर्वादये नमः।
ॐ अच्युताय नमः। [100]
ॐ वृषाकपये नमः।
ॐ अमेयात्मने नमः।
ॐ सर्वयोग-विनिःसृताय नमः।
ॐ वसवे नमः।
ॐ वसुमनसे नमः।
ॐ सत्याय नमः।
ॐ समात्मने नमः।
ॐ सम्मिताय नमः।
ॐ समाय नमः।
ॐ अमोघाय नमः। [110]
ॐ पुंडरीकाक्षाय नमः।
ॐ वृषकर्मणे नमः।
ॐ वृषाकृतये नमः।
ॐ रुद्राय नमः।

ॐ बहुशिरसे नमः ।
ॐ बभ्रवे नमः ।
ॐ विश्वयोनये नमः ।
ॐ शुचि-श्रवसे नमः ।
ॐ अमृताय नमः ।
ॐ शाश्वत-स्थाणवे नमः ।
ॐ वरारोहाय नमः ।
ॐ महातपसे नमः ।
ॐ सर्वगाय नमः ।
ॐ सर्ववि-द्भानवे नमः ।
ॐ विश्वक्सेनाय नमः ।
ॐ जनार्दनाय नमः ।
ॐ वेदाय नमः ।
ॐ वेदविदे नमः ।
ॐ अव्यङ्गाय नमः ।
ॐ वेदाङ्गाय नमः । [130]
ॐ वेदविदे नमः ।
ॐ कवये नमः ।
ॐ लोकाध्यक्षाय नमः ।
ॐ सुराध्यक्षाय नमः ।
ॐ धर्माध्यक्षाय नमः ।

ॐ कृताकृताय नमः ।
ॐ चतुरात्मने नमः ।
ॐ चतुर्व्यूहाय नमः ।
ॐ चतुर्द्रंष्ट्राय नमः ।
ॐ चतुर्भुजाय नमः । [140]
ॐ भ्राजिष्णवे नमः ।
ॐ भोजनाय नमः ।
ॐ भोक्त्रे नमः ।
ॐ सहिष्णवे नमः ।
ॐ जगदादिजाय नमः ।
ॐ अनघाय नमः ।
ॐ विजयाय नमः ।
ॐ जेत्रे नमः ।
ॐ विश्वयोनये नमः ।
ॐ पुनर्वसवे नमः । [150]
ॐ उपेन्द्राय नमः ।
ॐ नामाय नमः ।
ॐ प्रांशवे नमः ।
ॐ अमोघाय नमः ।
ॐ शुचये नमः ।
ॐ उर्जिताय नमः ।

ॐ अतीन्द्राय नमः।
ॐ सङ्ग्रहाय नमः।
ॐ सर्गाय नमः।
ॐ धृतात्मने नमः। [160]
ॐ नियमाय नमः।
ॐ यमाय नमः।
ॐ वेद्याय नमः।
ॐ वैद्याय नमः।
ॐ सदा-योगिने नमः।
ॐ वीरघ्ने नमः।
ॐ माधवाय नमः।
ॐ मधवे नमः।
ॐ अतीन्द्रियाय नमः।
ॐ महामायाय नमः।[170]
ॐ महोत्साहाय नमः।
ॐ महाबलाय नमः।
ॐ महाबुधाय नमः।
ॐ महावीराय नमः।
ॐ महाशक्तये नमः।
ॐ महाद्युतये नमः।
ॐ अनिर्देश्य-वपुषे नमः।

ॐ श्रीमते नमः।
ॐ अमेयत्मने नमः।
ॐ महाद्रिधृशे नमः। [180]
ॐ महेश्वासाय नमः।
ॐ महीभर्त्रे नमः।
ॐ श्रीनिवासाय नमः।
ॐ सतांगतये नमः।
ॐ अनिरुद्धाय नमः।
ॐ सुरानंदाय नमः।
ॐ गोविन्दाय नमः।
ॐ गोविदांपतये नमः।
ॐ मरीचये नमः।
ॐ दमनाय नमः। [190]
ॐ हंसाय नमः।
ॐ सुपर्णाय नमः।
ॐ भुजगोत्तमाय नमः।
ॐ हिरण्यनाभाय नमः।
ॐ सुतपसे नमः।
ॐ पद्मनाभाय नमः।
ॐ प्रजापतये नमः।
ॐ अमृत्यवे नमः।

ॐ सर्वदृशे नमः।
ॐ सिंहाय नमः। [200]
ॐ संधाद्ते नमः।
ॐ सन्धिमते नमः।
ॐ स्थिराय नमः।
ॐ अजाय नमः।
ॐ दुर्मर्षणाय नमः।
ॐ शास्त्रे नमः।
ॐ विश्रुतात्मने नमः।
ॐ सुरारिघ्ने नमः।
ॐ गुरुवे नमः।
ॐ गुरुतमाय नमः। [210]
ॐ धाम्ने नमः।
ॐ सत्याय नमः।
ॐ सत्य-पराक्रमाय नमः।
ॐ निमिषाय नमः।
ॐ अनिमिषाय नमः।
ॐ स्त्रग्वीणे नमः।
ॐ वाचस्पतये-दारधिये नमः।
ॐ अग्रण्ये नमः।
ॐ ग्रामण्ये नमः।
ॐ श्रीमते नमः। [220]
ॐ न्यायाय नमः।
ॐ नेत्रे नमः।
ॐ समीरणाय नमः।
ॐ सहस्त्रमूर्ध्ने नमः।
ॐ विश्वात्मने नमः।
ॐ सहस्त्राक्षाय नमः।
ॐ सहस्त्रपदे नमः।
ॐ आवर्तनाय नमः।
ॐ निवृत्तात्मने नमः।
ॐ संवृत्ताय नमः। [230]
ॐ संप्रमर्दनाय नमः।
ॐ अहःसंवर्तकाय नमः।
ॐ वन्हये नमः।
ॐ अनिलाय नमः।
ॐ धरणीधराय नमः।
ॐ सुप्रसादाय नमः।
ॐ प्रसन्नात्मने नमः।
ॐ विश्वधृषे नमः।
ॐ विश्वभुजे नमः।
ॐ विभवे नमः। [240]

ॐ सत्कर्त्रे नमः।
ॐ सत्कृताय नमः।
ॐ साधवे नमः।
ॐ जान्हवे नमः।
ॐ नारायणाय नमः।
ॐ नराय नमः।
ॐ असंख्येयाय नमः।
ॐ अप्रमेयात्मने नमः।
ॐ विशिष्टाय नमः।
ॐ शिष्टकृते नमः। [250]
ॐ शुचये नमः।
ॐ सिद्धार्थाय नमः।
ॐ सिद्ध-संकल्पाय नमः।
ॐ सिद्धिदाय नमः।
ॐ सिद्धि-साधाय नमः।
ॐ वृषाहिणे नमः।
ॐ वृषभाय नमः।
ॐ विष्णवे नमः।
ॐ वृषपर्वणे नमः।
ॐ वृषोदराय नमः। [260]
ॐ वर्धनाय नमः।

ॐ वर्धमानाय नमः।
ॐ विविक्ताय नमः।
ॐ श्रुति-सागराय नमः।
ॐ सुभुजाय नमः।
ॐ दुर्धराय नमः।
ॐ वाग्मिने नमः।
ॐ महेन्द्राय नमः।
ॐ वसुदाय नमः।
ॐ वसवे नमः। [270]
ॐ नैकरूपाय नमः।
ॐ बृह-द्रूपाय नमः।
ॐ शिपिविष्टाय नमः।
ॐ प्रकाशाय नमः।
ॐ ओजस्तेजो-द्युति-धराय नमः।
ॐ प्रकाशात्मने नमः।
ॐ प्रतापनाय नमः।
ॐ ऋद्धाय नमः।
ॐ स्पष्टा-क्षराय नमः।
ॐ मंत्राय नमः। [280]
ॐ चन्द्रांशवे नमः।
ॐ भास्कर-द्युतये नमः।

ॐ अमृतां-शूद्भवाय नमः।
ॐ भानवे नमः।
ॐ शशबिन्दवे नमः।
ॐ सुरेश्वराय नमः।
ॐ औधधाय नमः।
ॐ जगतहेतवे नमः।
ॐ सत्यधर्म-पराक्रमाय नमः।
ॐ भूतभव्य-भवन्नाथाय नमः।
ॐ पवनाय नमः।
ॐ पावनाय नमः।
ॐ अनलाय नमः।
ॐ कामघ्ने नमः।
ॐ कामकृते नमः।
ॐ कान्ताय नमः।
ॐ कामाय नमः।
ॐ कामप्रदाय नमः।
ॐ प्रभवे नमः।
ॐ युगादिकृते नमः। [300]
ॐ युगावर्ताय नमः।
ॐ नैकमायाय नमः।
ॐ महाशनाय नमः।

ॐ अदृश्याय नमः।
ॐ व्यक्तरूपाय नमः।
ॐ सहस्रजिते नमः।
ॐ अनन्तजिते नमः।
ॐ इष्टाय नमः।
ॐ विशिष्टाय नमः।
ॐ शिष्टेष्टाय नमः। [310]
ॐ शिखंडिने नमः।
ॐ नहुषाय नमः।
ॐ वृषाय नमः।
ॐ क्रोधाघ्ने नमः।
ॐ क्रोधकृत्-कर्त्रे नमः।
ॐ विश्वबाहवे नमः।
ॐ महीधराय नमः।
ॐ अच्युताय नमः।
ॐ प्रथिताय नमः।
ॐ प्राणाय नमः। [320]
ॐ प्राणदाय नमः।
ॐ वासवानुजाय नमः।
ॐ अपां निधये नमः।
ॐ अधिष्ठानाय नमः।

ॐ अप्रमत्ताय नमः ।
ॐ प्रतिष्ठिताय नमः ।
ॐ स्कन्दाय नमः ।
ॐ स्कन्दधराय नमः ।
ॐ धुर्याय नमः ।
ॐ वरदाय नमः । [330]
ॐ वायुवाहनाय नमः ।
ॐ वासुदेवाय नमः ।
ॐ बृहद्भानवे नमः ।
ॐ आदिदेवाय नमः ।
ॐ पुरन्दराय नमः ।
ॐ अशोकाय नमः ।
ॐ तारणाय नमः ।
ॐ ताराय नमः ।
ॐ शूराय नमः ।
ॐ शौरये नमः । [340]
ॐ जनेश्वराय नमः ।
ॐ अनुकूलाय नमः ।
ॐ शतावर्ताय नमः ।
ॐ पद्मिने नमः ।
ॐ पद्मनिभेक्षणाय नमः ।
ॐ पद्मनाभाय नमः ।
ॐ अरविन्दाय नमः ।
ॐ पद्मगर्भाय नमः ।
ॐ शरीरभृते नमः ।
ॐ महर्धये नमः । [350]
ॐ ऋद्धाय नमः ।
ॐ वृद्धात्मने नमः ।
ॐ महाक्षाय नमः ।
ॐ गरुडध्वजाय नमः ।
ॐ अतुलाय नमः ।
ॐ शरभाय नमः ।
ॐ भीमाय नमः ।
ॐ समयज्ञाय नमः ।
ॐ हविर्हरये नमः ।
ॐ सर्वलक्षण -लक्षणाय नमः ।
ॐ लक्ष्मीवते नमः ।
ॐ समितिंजयाय नमः ।
ॐ विक्षराय नमः ।
ॐ रोहिताय नमः ।
ॐ मार्गाय नमः ।
ॐ हेतवे नमः ।

ॐ दामोदराय नमः।
ॐ सहाय नमः।
ॐ महीधराय नमः।
ॐ महाभागाय नमः।[370]
ॐ वेगवते नमः।
ॐ अमिताशनाय नमः।
ॐ उद्भवाय नमः।
ॐ क्षोभनाय नमः।
ॐ देवाय नमः।
ॐ श्रीगर्भाय नमः।
ॐ परमेश्वराय नमः।
ॐ करणाय नमः।
ॐ कारणाय नमः।
ॐ कर्त्रे नमः। [380]
ॐ विकर्त्रे नमः।
ॐ गहनाय नमः।
ॐ गुहाय नमः।
ॐ व्यवसायाय नमः।
ॐ व्यवस्थानाय नमः।
ॐ संस्थानाय नमः।
ॐ स्थानदाय नमः।
ॐ ध्रुवाय नमः।
ॐ परार्ध्ये नमः।
ॐ परम-स्पष्टाय नमः। [390]
ॐ तुष्टाय नमः।
ॐ पुष्टाय नमः।
ॐ शुभेक्षणाय नमः।
ॐ रामाय नमः।
ॐ विरामाय नमः।
ॐ विरजाय नमः।
ॐ मार्गाय नमः।
ॐ नेयाय नमः।
ॐ नयाय नमः।
ॐ अनयाय नमः। [400]
ॐ वीरायै नमः।
ॐ शक्तिमतां श्रेष्ठायै नमः।
ॐ धर्मायै नमः।
ॐ धर्म-विदुत्तमायै नमः।
ॐ वैकुंठायै नमः।
ॐ पुरुषायै नमः।
ॐ प्राणायै नमः।
ॐ प्राणदायै नमः।

ॐ प्रणवायै नमः।
ॐ पृथवे नमः। [410]
ॐ हिरण्य-गर्भायै नमः।
ॐ शत्रुघ्नायै नमः।
ॐ व्याप्तायै नमः।
ॐ वायवे नमः।
ॐ अधोक्षजायै नमः।
ॐ ऋतवे नमः।
ॐ सुदर्शनायै नमः।
ॐ कालायै नमः।
ॐ परमेष्ठिने नमः।
ॐ परिग्रहाय नमः। [420]
ॐ उग्राय नमः।
ॐ संवत्सराय नमः।
ॐ दक्षाय नमः।
ॐ विश्रामाय नमः।
ॐ विश्व-दक्षिणाय नमः।
ॐ विस्ताराय नमः।
ॐ स्थावर-स्थाणवे नमः।
ॐ प्रमाणाय नमः।
ॐ बीज-मव्ययाय नमः।

ॐ अर्थाय नमः। [430]
ॐ अनर्थाय नमः।
ॐ महाकोशाय नमः।
ॐ महाभोगाय नमः।
ॐ महाधनाय नमः।
ॐ अनिर्विण्णाय नमः।
ॐ स्थविष्ठाय नमः।
ॐ अभुवे नमः।
ॐ धर्मयूपाय नमः।
ॐ महामखाय नमः।
ॐ नक्षत्रनेमये नमः। [440]
ॐ नक्षित्रिणे नमः।
ॐ क्षमाय नमः।
ॐ क्षामाय नमः।
ॐ समीहनाय नमः।
ॐ यज्ञाय नमः।
ॐ ईज्याय नमः।
ॐ महेज्याय नमः।
ॐ क्रतवे नमः।
ॐ सत्राय नमः।
ॐ सतांगतये नमः। [450]

ॐ सर्वदर्शिने नमः ।
ॐ विमुक्तात्मने नमः ।
ॐ सर्वज्ञाय नमः ।
ॐ ज्ञान-मुत्तमाय नमः ।
ॐ सुव्रताय नमः ।
ॐ सुमुखाय नमः ।
ॐ सूक्ष्माय नमः ।
ॐ सुघोषाय नमः ।
ॐ सुखदाय नमः ।
ॐ सुहृदे नमः । [460]
ॐ मनोहराय नमः ।
ॐ जितक्रोधाय नमः ।
ॐ वीरबाहवे नमः ।
ॐ विदारणाय नमः ।
ॐ स्वापनाय नमः ।
ॐ स्ववशाय नमः ।
ॐ व्यापिने नमः ।
ॐ नैकात्मान नमः ।
ॐ नैककर्मकृते नमः ।
ॐ वत्सराय नमः । [470]
ॐ वत्सलाय नमः ।
ॐ वत्सिने नमः ।
ॐ रत्न-गर्भाय नमः ।
ॐ धनेश्वराय नमः ।
ॐ धर्मगुपे नमः ।
ॐ धर्मकृते नमः ।
ॐ धर्मिने नमः ।
ॐ सते नमः ।
ॐ असते नमः ।
ॐ क्षराय नमः । [480]
ॐ अक्षराय नमः ।
ॐ अविज्ञात्रे नमः ।
ॐ सहस्रांशवे नमः ।
ॐ विधात्रे नमः ।
ॐ कृतलक्षणाय नमः ।
ॐ गभस्तिनेमये नमः ।
ॐ सत्त्वस्थाय नमः ।
ॐ सिंहाय नमः ।
ॐ भूतमहेश्वराय नमः ।
ॐ आदिदेवाय नमः । [490]
ॐ महादेवाय नमः ।
ॐ देवेशाय नमः ।

ॐ देवभृ-द्गुरवे नमः।
ॐ उत्तराय नमः।
ॐ गोपतये नमः।
ॐ गोप्त्रे नमः।
ॐ ज्ञान-गम्याय नमः।
ॐ पुरातनाय नमः।
ॐ शरीरभूभृते नमः।
ॐ भोक्त्रे नमः। [500]
ॐ कपीन्द्राय नमः।
ॐ भूरि-दक्षिणाय नमः।
ॐ सोमपाय नमः।
ॐ अमृतपाय नमः।
ॐ सोमाय नमः।
ॐ पुरुजिते नमः।
ॐ पुरु-सत्तमाय नमः।
ॐ विनयाय नमः।
ॐ जयाय नमः।
ॐ सत्यसंधाय नमः।[510]
ॐ दाशार्हाय नमः।
ॐ सात्वतां पतये नमः।
ॐ जीवाय नमः।

ॐ विनयिता-साक्षिणे नमः।
ॐ मुकुन्दाय नमः।
ॐ अमित-विक्रमाय नमः।
ॐ अम्भोनिधये नमः।
ॐ अनन्तात्मने नमः।
ॐ महोदधिशयाय नमः।
ॐ अनन्तकाय नमः। [520]
ॐ अजाय नमः।
ॐ महार्हाय नमः।
ॐ स्वाभाव्याय नमः।
ॐ जितामित्राय नमः।
ॐ प्रमोदाय नमः।
ॐ आनन्दाय नमः।
ॐ नन्दनाय नमः।
ॐ नन्दाय नमः।
ॐ सत्यधर्मणे नमः।
ॐ त्रिविक्रमाय नमः। [530]
ॐ महर्षये-कपिलाचार्याय नमः।
ॐ कृतज्ञाय नमः।
ॐ मेदिनीपतये नमः।
ॐ त्रिपदाय नमः।

ॐ त्रिदशाध्यक्षाय नमः।
ॐ महाशृङ्गाय नमः।
ॐ कृतान्तकृते नमः।
ॐ महावराहाय नमः।
ॐ गोविन्दाय नमः।
ॐ सुषेणाय नमः। [540]
ॐ कनकाङ्गदिने नमः।
ॐ गुह्याय नमः।
ॐ गभीराय नमः।
ॐ गहनाय नमः।
ॐ गुप्ताय नमः।
ॐ चक्रगदा-धराय नमः।
ॐ वेधसे नमः।
ॐ स्वाङ्गाय नमः।
ॐ अजिताय नमः।
ॐ कृष्णाय नमः। [550]
ॐ दृढाय नमः।
ॐ संकर्षणाच्युताय नमः।
ॐ वरुणाय नमः।
ॐ वारुणाय नमः।
ॐ वृक्षाय नमः।

ॐ पुष्कराक्षाय नमः।
ॐ महामनसे नमः।
ॐ भगवते नमः।
ॐ भगघ्ने नमः।
ॐ आनन्दिने नमः। [560]
ॐ वनमालिने नमः।
ॐ हलायुधाय नमः।
ॐ आदित्याय नमः।
ॐ ज्योति-रादित्याय नमः।
ॐ सहिष्णुवे नमः।
ॐ गतिसत्तमाय नमः।
ॐ सुधन्वने नमः।
ॐ खण्ड-पराशवे नमः।
ॐ दारुणाय नमः।
ॐ द्रविणप्रदाय नमः। [570]
ॐ दिवस्पृशे नमः।
ॐ सर्वदृग्व्यासाय नमः।
ॐ वाचस्पतये अयोनिजाय नमः।
ॐ त्रिसाम्ने नमः।
ॐ सामगाय नमः।
ॐ साम्ने नमः।

ॐ निर्वाणाय नमः।
ॐ भेषजाय नमः।
ॐ भिषजे नमः।
ॐ संन्यासकृते नमः।[580]
ॐ शमाय नमः।
ॐ शान्ताय नमः।
ॐ निष्ठायै नमः।
ॐ शान्त्यै नमः।
ॐ परायणाय नमः।
ॐ शुभाङ्गाय नमः।
ॐ शान्तिदाय नमः।
ॐ स्त्रष्ट्रे नमः।
ॐ कुमुदाय नमः।
ॐ कुवलेशाय नमः। [590]
ॐ गोहिताय नमः।
ॐ गोपतये नमः।
ॐ गोप्त्रे नमः।
ॐ वृषभाक्षाय नमः।
ॐ वृषप्रियाय नमः।
ॐ अनिवर्तिने नमः।
ॐ निवृत्तात्मने नमः।

ॐ संक्षेप्त्रे नमः।
ॐ क्षेमकृते नमः।
ॐ शिवाय नमः। [600]
ॐ श्रीवत्सवक्षे नमः।
ॐ श्रीवासाय नमः।
ॐ श्रीपतये नमः।
ॐ श्रीमतां वराय नमः।
ॐ श्रीदाय नमः।
ॐ श्रीशाय नमः।
ॐ श्रीनिवासाय नमः।
ॐ श्रीनिधये नमः।
ॐ श्रीविभावनाय नमः।
ॐ श्रीधराय नमः। [610]
ॐ श्रीकराय नमः।
ॐ श्रेयसे नमः।
ॐ श्रीमते नमः।
ॐ लोकत्रया-श्राय नमः।
ॐ स्वक्षाय नमः।
ॐ स्वाङ्गाय नमः।
ॐ शतानन्दाय नमः।
ॐ नन्द्ये नमः।

ॐ ज्योतिर्गणेश्वराय नमः ।
ॐ विजितात्मने नमः ।
ॐ विधेयात्मने नमः ।
ॐ सत्कीर्तये नमः ।
ॐ छिन्न-संशयाय नमः ।
ॐ उदीर्णाय नमः ।
ॐ सर्वत-चक्षुसे नमः ।
ॐ अनीशाय नमः ।
ॐ शाश्वत-स्थिराय नमः ।
ॐ भूशयाय नमः ।
ॐ भूषणाय नमः ।
ॐ भूतये नमः । [630]
ॐ विशोकाय नमः ।
ॐ शोक-नाशनाय नमः ।
ॐ अर्चिष्मते नमः ।
ॐ अर्चिताय नमः ।
ॐ कुम्भाय नमः ।
ॐ विशुद्धात्मने नमः ।
ॐ विशोधनाय नमः ।
ॐ अनिरुद्धाय नमः ।
ॐ अप्रतिरथाय नमः ।

ॐ प्रद्युम्नाय नमः । [640]
ॐ अमित-विक्रमाय नमः ।
ॐ काल-नेमिनिघ्ने नमः ।
ॐ वीराय नमः ।
ॐ शौरये नमः ।
ॐ शूर-जनेश्वराय नमः ।
ॐ त्रिलोकात्मने नमः ।
ॐ त्रिलोकेशाय नमः ।
ॐ केशवाय नमः ।
ॐ केशिघ्ने नमः ।
ॐ हरये नमः । [650]
ॐ काम-देवाय नमः ।
ॐ काम-पालाय नमः ।
ॐ कामिने नमः ।
ॐ कान्ताय नमः ।
ॐ कृता-गमाय नमः ।
ॐ अनिर्देश्य-वपुषे नमः ।
ॐ विष्णवे नमः ।
ॐ वीराय नमः ।
ॐ अनन्ताय नमः ।
ॐ धनंजयाय नमः । [660]

ॐ ब्रह्मण्याय नमः।
ॐ ब्रह्मकृते नमः।
ॐ ब्रह्मणे नमः।
ॐ ब्राह्मणे नमः।
ॐ ब्रह्म-विवर्धनाय नमः।
ॐ ब्रह्मविदे नमः।
ॐ ब्राह्मणाय नमः।
ॐ ब्रह्मिणे नमः।
ॐ ब्रह्मज्ञाय नमः।
ॐ ब्राह्मण-प्रियाय नमः।
ॐ महाक्रमाय नमः।
ॐ महाकर्मणे नमः।
ॐ महातेजसे नमः।
ॐ महोरगाय नमः।
ॐ महाक्रत्वे नमः।
ॐ महायज्वने नमः।
ॐ महायज्ञाय नमः।
ॐ महा-हविषे नमः।
ॐ स्तव्याय नमः।
ॐ स्तव-प्रियाय नमः।[680]
ॐ स्तोत्राय नमः।

ॐ स्तुतये नमः।
ॐ स्तोत्रे नमः।
ॐ रणप्रियाय नमः।
ॐ पूर्णाय नमः।
ॐ पूरयित्रे नमः।
ॐ पुण्याय नमः।
ॐ पुण्यकीर्तये नमः।
ॐ अनामयाय नमः।
ॐ मनोजवाय नमः। [690]
ॐ तीर्थकराय नमः।
ॐ वसुरेतसे नमः।
ॐ वसुप्रदाय नमः।
ॐ वासुदेवाय नमः।
ॐ वसवे नमः।
ॐ वसुमनसे नमः।
ॐ हविषे नमः।
ॐ हविषे नमः।
ॐ सद्गतये नमः।
ॐ सद्कृतये नमः। [700]
ॐ सत्तायै नमः।
ॐ सद्भूतये नमः।

ॐ सत्परायणाय नमः।
ॐ शूरसेनाय नमः।
ॐ यदुश्रेष्ठाय नमः।
ॐ सन्निवासाय नमः।
ॐ सूयामुनाय नमः।
ॐ भूतावासाय नमः।
ॐ वासुदेवाय नमः।
ॐ सर्वासुनिलयाय नमः।
ॐ अनलाय नमः।
ॐ दर्पघ्ने नमः।
ॐ दर्पदाय नमः।
ॐ दृप्ताय नमः।
ॐ दुर्धराय नमः।
ॐ अपराजिताय नमः।
ॐ विश्वमूर्तये नमः।
ॐ महामूर्तये नमः।
ॐ दीप्त-मूर्तये नमः।
ॐ अमूर्ति-मते नमः।[720]
ॐ अनेकमूर्तये नमः।
ॐ अव्यक्ताय नमः।
ॐ शतमूर्तये नमः।

ॐ शताननाय नमः।
ॐ एकैस्मै नमः।
ॐ नैकस्मै नमः।
ॐ सवाय नमः।
ॐ काय नमः।
ॐ कस्मै नमः।
ॐ यस्मै नमः। [730]
ॐ तस्मै नमः।
ॐ पदम-नुत्तमाय नमः।
ॐ लोकबन्धवे नमः।
ॐ लोकनाथाय नमः।
ॐ माधवाय नमः।
ॐ भक्त-वत्सलाय नमः।
ॐ सुवर्ण-वर्णाय नमः।
ॐ हेमाङ्गाय नमः।
ॐ वराङ्गाय नमः।
ॐ चन्दना-ङ्गदिने नमः। [740]
ॐ वीरघ्ने नमः।
ॐ विषमाय नमः।
ॐ शून्याय नमः।
ॐ घृता-शीशाय नमः।

ॐ अचलाय नमः।
ॐ चलाय नमः।
ॐ अमानिने नमः।
ॐ मानदाय नमः।
ॐ मान्याय नमः।
ॐ लोक-स्वामिने नमः।
ॐ त्रिलोक-धृषे नमः।
ॐ सुमेधसे नमः।
ॐ मेधजाय नमः।
ॐ धन्याय नमः।
ॐ सत्य-मेधसे नमः।
ॐ धरा-धराय नमः।
ॐ तेजो-वृषाय नमः।
ॐ द्युति-धराय नमः।
ॐ सर्व-शस्त्रभृतां-वराय नमः।
ॐ प्रग्रहाय नमः। [760]
ॐ निग्रहाय नमः।
ॐ व्यग्राय नमः।
ॐ नैकशृङ्गाय नमः।
ॐ गदाग्रजाय नमः।
ॐ चतुर्मूर्तये नमः।
ॐ चतुर्बाहवे नमः।
ॐ चतुर्व्यूहाय नमः।
ॐ चतुर्गतये नमः।
ॐ चतुरात्मने नमः।
ॐ चतुर्भावाय नमः। [770]
ॐ चतुर्वेद-विदे नमः।
ॐ एकपदे नमः।
ॐ समावर्ताय नमः।
ॐ निवृतात्मने नमः।
ॐ दुर्जाय नमः।
ॐ दुरतिक्रमाय नमः।
ॐ दुर्लभाय नमः।
ॐ दुर्गमाय नमः।
ॐ दुर्गाय नमः।
ॐ दुरावासाय नमः। [780]
ॐ दुरारिघ्ने नमः।
ॐ शुभाङ्गाय नमः।
ॐ लोक-सारङ्गाय नमः।
ॐ सुतन्तवे नमः।
ॐ तन्तु-वर्धनाय नमः।
ॐ इन्द्रकर्मणे नमः।

ॐ महाकर्मणे नमः ।
ॐ कृतकर्मणे नमः ।
ॐ कृतागमाय नमः ।
ॐ उद्भवाय नमः । [790]
ॐ सुन्दराय नमः ।
ॐ सुन्दाय नमः ।
ॐ रत्ननाभाय नमः ।
ॐ सुलोचनाय नमः ।
ॐ अर्काय नमः ।
ॐ वाजसनाय नमः ।
ॐ शृङ्गिने नमः ।
ॐ जयन्ताय नमः ।
ॐ सर्वविज्जयिने नमः ।
ॐ उद्भवाय नमः ।
ॐ सुवर्ण बिंदवे नमः ।
ॐ अक्षोभ्याय नमः ।[800]
ॐ अधोक्षजाय नमः ।
ॐ सर्व-वागीश्वराय नमः ।
ॐ महाह्रदाय नमः ।
ॐ महागर्ताय नमः ।
ॐ महाभूताय नमः ।

ॐ महानिधये नमः ।
ॐ कुमुदाय नमः ।
ॐ कुन्दराय नमः ।
ॐ कुन्दाय नमः ।
ॐ पर्जन्याय नमः । [810]
ॐ पावनाय नमः ।
ॐ अनिलाय नमः ।
ॐ अमृतांशाय नमः ।
ॐ अमृत-वपुषे नमः ।
ॐ सर्वज्ञाय नमः ।
ॐ सर्वतो-मुखाय नमः ।
ॐ सुलभाय नमः ।
ॐ सुव्रताय नमः ।
ॐ सिद्धाय नमः ।
ॐ शत्रुजिते नमः । [820]
ॐ शत्रु-तापनाय नमः ।
ॐ न्यग्रोधाय नमः ।
ॐ उदुम्बराय नमः ।
ॐ अश्वत्थाय नमः ।
ॐ चाणूरान्ध्रनि-षूदनाय नमः ।
ॐ सहस्त्रार्चिषे नमः ।

ॐ सप्तजिह्वाय नमः।
ॐ सप्तैधसे नमः।
ॐ सप्तवाहनाय नमः।
ॐ अमूर्तये नमः। [830]
ॐ अनघाय नमः।
ॐ अचिन्त्याय नमः।
ॐ भयकृते नमः।
ॐ भयनाशनाय नमः।
ॐ अणवे नमः।
ॐ बृहते नमः।
ॐ कृशाय नमः।
ॐ स्थूलाय नमः।
ॐ गुणभृते नमः।
ॐ निर्गुणाय नमः। [840]
ॐ महते नमः।
ॐ अधृताय नमः।
ॐ स्वधृताय नमः।
ॐ स्वास्याय नमः।
ॐ प्राग्वंशाय नमः।
ॐ वंश-वर्धनाय नमः।
ॐ भारभृते नमः।
ॐ कथिताय नमः।
ॐ योगिने नमः।
ॐ योगीशाय नमः। [850]
ॐ सर्व-कामदाय नमः।
ॐ आश्रमाय नमः।
ॐ श्रमणाय नमः।
ॐ क्षामाय नमः।
ॐ सुपर्णाय नमः।
ॐ वायु-वाहनाय नमः।
ॐ धनुर्धराय नमः।
ॐ धनु-र्वेदाय नमः।
ॐ दंडाय नमः।
ॐ दमित्रे नमः। [860]
ॐ दमाय नमः।
ॐ अपराजिताय नमः।
ॐ सर्व-सहाय नमः।
ॐ नियन्त्रे नमः।
ॐ नियमाय नमः।
ॐ यमाय नमः।
ॐ सत्त्व-वते नमः।
ॐ सात्त्विकाय नमः।
ॐ सत्याय नमः।
ॐ सत्यधर्म-परायणाय नमः।

ॐ अभिप्रायाय नमः।
ॐ प्रियार्हाय नमः।
ॐ अर्हाय नमः।
ॐ प्रिय-कृते नमः।
ॐ प्रीति-वर्धनाय नमः।
ॐ विहायसगतये नमः।
ॐ ज्योतिषे नमः।
ॐ सुरुचये नमः।
ॐ हुतभुजे नमः।
ॐ विभवे नमः। [880]
ॐ रवये नमः।
ॐ विरोचनाय नमः।
ॐ सूर्याय नमः।
ॐ सवित्रे नमः।
ॐ रवि-लोचनाय नमः।
ॐ अनन्ताय नमः।
ॐ हुतभुजे नमः।
ॐ भोक्त्रे नमः।
ॐ सुखदाय नमः।
ॐ नैकजाय नमः। [890]
ॐ अग्रजाय नमः।
ॐ अनि-र्विण्णाय नमः।
ॐ सदा-मर्षिणे नमः।
ॐ लोकाधिष्ठानाय नमः।
ॐ अद्भूताय नमः।
ॐ सनाते नमः।
ॐ सनातन-तमाय नमः।
ॐ कपिलाय नमः।
ॐ कपये नमः।
ॐ अव्ययाय नमः। [900]
ॐ स्वस्तिदाय नमः।
ॐ स्वस्तिकृते नमः।
ॐ स्वस्तये नमः।
ॐ स्वस्तिभुजे नमः।
ॐ स्वस्ति-दक्षिणाय नमः।
ॐ अरौद्राय नमः।
ॐ कुण्डलिने नमः।
ॐ चक्रिणे नमः।
ॐ विक्रमिणे नमः।
ॐ उर्जित-शासनाय नमः [910]
ॐ शब्दातिगाय नमः।
ॐ शब्दसहाय नमः।
ॐ शिशिराय नमः।
ॐ शर्वरीकराय नमः।

ॐ अक्रूराय नमः।
ॐ पेशलाय नमः।
ॐ दक्षाय नमः।
ॐ दक्षिणाय नमः।
ॐ क्षमिणां वराय नमः।
ॐ विद्वत्तमाय नमः। [920]
ॐ वीतभयाय नमः।
ॐ पुण्यश्रवण-कीर्तनाय नमः।
ॐ उत्तारणाय नमः।
ॐ दुष्कृतिघ्ने नमः।
ॐ पुण्याय नमः।
ॐ दुस्वप्न-नाशाय नमः।
ॐ वीरघ्ने नमः।
ॐ रक्षणाय नमः।
ॐ सद्भ्यो नमः।
ॐ जीवनाय नमः। [930]
ॐ पर्यव-स्थिताय नमः।
ॐ अनन्त-रूपाय नमः।
ॐ अनन्त-श्रिये नमः।
ॐ जित-मन्यवे नमः।
ॐ भयापहाय नमः।
ॐ चतुरस्राय नमः।

ॐ गभीरात्मने नमः।
ॐ विदिशाय नमः।
ॐ व्यादिशाय नमः।
ॐ दिशाय नमः। [940]
ॐ अनादये नमः।
ॐ भुवोभुवे नमः।
ॐ लक्ष्मै नमः।
ॐ सुधीराय नमः।
ॐ रुचिराङ्गदाय नमः।
ॐ जननाय नमः।
ॐ जन-जन्मादये नमः।
ॐ भीमाय नमः।
ॐ भीम-पराक्रमाय नमः।
ॐ आधार-निलयाय नमः।[950]
ॐ धात्रे नमः।
ॐ पुष्पहासाय नमः।
ॐ प्रजागराय नमः।
ॐ उर्ध्वगाय नमः।
ॐ सत्पथाचाराय नमः।
ॐ प्राणदाय नमः।
ॐ प्रणवाय नमः।
ॐ पणाय नमः।

ॐ प्रमाणाय नमः ।

ॐ प्राण-निलयाय नमः ।

ॐ प्राणभृते नमः ।

ॐ प्राणजीवाय नमः ।

ॐ तत्त्वाय नमः ।

ॐ तत्त्वविदे नमः ।

ॐ एकात्मने नमः ।

ॐ जन्म-मृत्यु-जरातिगाय नमः ।

ॐ भुर्भुवः स्वस्तरवे नमः ।

ॐ ताराय नमः ।

ॐ सवित्रे नमः ।

ॐ प्रपिता-महाय नमः [970]

ॐ यज्ञाय नमः ।

ॐ यज्ञपतये नमः ।

ॐ यज्वने नमः ।

ॐ यज्ञाङ्गाय नमः ।

ॐ यज्ञवाहनाय नमः ।

ॐ यज्ञभृते नमः ।

ॐ यज्ञकृते नमः ।

ॐ यज्ञिने नमः ।

ॐ यज्ञभुजे नमः ।

ॐ यज्ञसाधनाय नमः

ॐ यज्ञा-न्तकृते नमः ।

ॐ यज्ञ-गुह्याय नमः ।

ॐ अन्नाय नमः ।

ॐ अन्नादाय नमः ।

ॐ आत्म-योनये नमः ।

ॐ स्वयं-जाताय नमः ।

ॐ वैखानाय नमः ।

ॐ सामगायनाय नमः ।

ॐ देवकी-नन्दनाय नमः ।

ॐ स्रष्ट्रे नमः । [990]

ॐ क्षितीशाय नमः ।

ॐ पापनाशनाय नमः ।

ॐ शंखभृते नमः ।

ॐ नन्दकिने नमः ।

ॐ चक्रिणे नमः ।

ॐ शर्ङ्गधन्वने नमः ।

ॐ गदाधराय नमः ।

ॐ रथाङ्ग्पाणये नमः ।

ॐ अक्षोभ्याय नमः ।

ॐ सर्व-प्रहरणा-युधाय नमः[1000]

**इति श्री विष्णुसहस्रनामावली समाप्ता ॥**

## ॥ श्री विष्णु अष्टोत्तरशतनामावलिः ॥

ॐ विष्णवे नमः।
ॐ लक्ष्मीपतये नमः।
ॐ कृष्णाय नमः।
ॐ वैकुण्ठाय नमः।
ॐ गरुड-ध्वजाय नमः।
ॐ परब्रह्मणे नमः।
ॐ जगन्नाथाय नमः।
ॐ वासुदेवाय नमः।
ॐ त्रिविक्रमाय नमः।
ॐ दैत्यान्तकाय नमः।
ॐ मधुरिपवे नमः।
ॐ तार्क्ष्य-वाहनाय नमः।
ॐ सनातनाय नमः।
ॐ नारायणाय नमः।
ॐ पद्मनाभाय नमः।
ॐ हृषीकेशाय नमः।
ॐ सुधा-प्रदाय नमः।
ॐ माधवाय नमः।
ॐ पुण्डरीकाक्षाय नमः।
ॐ स्थिति-कर्त्रे नमः।

ॐ परात्पराय नमः।
ॐ वनमालिने नमः।
ॐ यज्ञ-रूपाय नमः।
ॐ चक्रपाणये नमः।
ॐ गदा-धराय नमः।
ॐ उपेन्द्राय नमः।
ॐ केशवाय नमः।
ॐ हंसाय नमः।
ॐ समुद्र-मथनाय नमः।
ॐ हरये नमः।
ॐ गोविन्दाय नमः।
ॐ ब्रह्म-जनकाय नमः।
ॐ कैटभासुर-मर्दनाय नमः।
ॐ श्रीधराय नमः।
ॐ काम-जनकाय नमः।
ॐ शेषशायिने नमः।
ॐ चतुर्भुजाय नमः।
ॐ पाञ्चजन्य-धराय नमः।
ॐ श्रीमते नमः।
ॐ शार्ङ्ग-पाणये नमः।

ॐ जनार्दनाय नमः।
ॐ पीताम्बर-धराय नमः।
ॐ देवाय नमः।
ॐ सूर्यचन्द्र-विलोचनाय नमः।
ॐ मत्स्य-रूपाय नमः।
ॐ कूर्म-तनवे नमः।
ॐ क्रोड-रूपाय नमः।
ॐ नृके-सरिणे नमः।
ॐ वामनाय नमः।
ॐ भार्गवाय नमः।
ॐ रामाय नमः।
ॐ बलिने नमः।
ॐ कल्किने नमः।
ॐ हयान-नाय नमः।
ॐ विश्वम्भराय नमः।
ॐ शिशुमाराय नमः।
ॐ श्रीकराय नमः।
ॐ कपिलाय नमः।
ॐ ध्रुवाय नमः।
ॐ दत्तत्रेयाय नमः।
ॐ अच्युताय नमः।

ॐ अनन्ताय नमः।
ॐ मुकुन्दाय नमः।
ॐ दधि-वामनाय नमः।
ॐ धन्वन्तरये नमः।
ॐ श्रीनिवासाय नमः।
ॐ प्रद्युम्नाय नमः।
ॐ पुरुषोत्तमाय नमः।
ॐ श्रीवत्स-कौस्तुभ-धराय नमः
ॐ मुरारातये नमः।
ॐ अधोक्षजाय नमः।
ॐ ऋषभाय नमः।
ॐ मोहिनी-रूप-धारिणे नमः।
ॐ सङ्कर्षणाय नमः।
ॐ पृथवे नमः।
ॐ क्षीराब्धि-शायिने नमः।
ॐ भूतात्मने नमः।
ॐ अनिरुद्धाय नमः।
ॐ भक्त-वत्सलाय नमः।
ॐ नराय नमः।
ॐ गजेन्द्र-वरदाय नमः।
ॐ त्रिधाम्ने नमः।

ॐ भूत-भावनाय नमः।
ॐ श्वेत-द्वीप-सुवास्त-व्याय नमः
ॐ सनकादि-मुनि-ध्येयाय नमः।
ॐ भगवते नमः।
ॐ शङ्कर-प्रियाय नमः।
ॐ नील-कान्ताय नमः।
ॐ धरा-कान्ताय नमः।
ॐ वेदात्मने नमः।
ॐ बादरायणाय नमः।
ॐ भागीरथी-जन्म-भूमि-)
पाद-पद्माय नमः।)
ॐ सतां प्रभवे नमः।
ॐ स्वभुवे नमः।
ॐ विभवे नमः।

ॐ घनश्या-माय नमः।
ॐ जग-त्कारणाय नमः।
ॐ अव्ययाय नमः।
ॐ बुद्धा-वताराय नमः।
ॐ शान्तात्मने नमः।
ॐ लीला-मानुष -विग्रहाय नमः
ॐ दामोदराय नमः।
ॐ विराड्रूपाय नमः।
ॐ भूतभव्य-भव-त्प्रभवे नमः।
ॐ आदि-देवाय नमः।
ॐ देव-देवाय नमः।
ॐ प्रह्लाद-परिपालकाय नमः।
ॐ श्रीमहा-विष्णवे नमः।

**इति श्री महाविष्णवष्टोत्तर-शत-नामवलिः समाप्ता ॥**

# ॥ श्री ललिता सहस्र नाम स्तोत्रम् ॥

********

*Compiled By Shri N K Venkitaraman.*

********

[ For a free copy of printable PDF file
write to nkv.nvr@gmail.com ]

(All texts have been carefully proof-read. Every effort has been made to ensure that no errors exist in these texts. If you find an error, please report it so that it can be corrected.)

॥ न्यासः ॥

अस्य श्रीललिता-सहस्रनाम-स्तोत्र-माला मन्त्रस्य ।
वशिन्यादि-वाग्देवता ऋषयः । अनुष्टुप् छन्दः ।
श्रीललिता-परमेश्वरी देवता ।श्रीमद्-वाग्भव-कूटेति बीजम् ।
मध्य-कूटेति शक्तिः । शक्ति-कूटेति कीलकम् ।
श्रीललिता-महा-त्रिपुर-सुन्दरी-प्रसाद-सिद्धि-द्वारा
चिन्तित-फला-वाप्त्यर्थे जपे विनियोगः ।

॥ ध्यानम् ॥

सिन्दूरा-रुण विग्रहां त्रिनयनां माणिक्य-मौलि स्फुरत्
तारा नायक शेखरां स्मित-मुखी मापीन वक्षो-रुहाम् ।
पाणिभ्या-मलि-पूर्ण रत्न चषकं रक्तोत्पलं बिभ्रतीं
सौम्यां रत्न-घटस्थ रक्त-चरणां ध्यायेत् परा-मम्बिकाम् ॥

ध्यायेत् पद्मा-सनस्थां विकसित-वदनां पद्म-पत्राय-ताक्षीं
हेमाभां पीत-वस्त्रां कर-कलित-लसद्धेम-पद्मां वराङ्गीम् ।
सर्वालङ्कार युक्तां सतत-मभयदां भक्त-नम्रां भवानीं
श्रीविद्यां शान्त मूर्तिं सकल सुरनुतां सर्व सम्प-त्प्रदात्रीम् ॥

सकुङ्कुम विलेपना-मलिक-चुम्बि कस्तूरिकां
समन्द हसिते-क्षणां सशर चाप पाशाङ्कुशाम् ।

अशेष-जन मोहिनीं अरुण माल्य भूषाम्बरां
जपाकुसुम भासुरां जप-विधौ स्मरे-दम्बिकाम् ॥
अरुणां करुणा तरङ्गिताक्षीं धृत पाशाङ्कुश पुष्प बाण-चापाम्
अणि-मादिभि रावृतां मयूखै-रह-मित्येव विभावये भवानीम् ॥

ॐ श्री महा देव्यै नमः ॥

## अथ श्री ललिता सहस्रनाम स्तोत्रम्

ॐ श्रीमाता श्रीमहा-राज्ञी श्रीमत्-सिंहासनेश्वरी ।
चिदग्नि-कुण्ड-सम्भूता देवकार्य-समुद्यता ॥ १ ॥

उद्यद्भानु-सहस्राभा चतुर्बाहु-समन्विता ।
राग-स्वरूप-पाशाढ्या क्रोधाकारा-ङ्कुशो-ज्ज्वला ॥ २ ॥

मनो-रूपेक्षु-कोदण्डा पञ्च-तन्मात्र-सायका ।
निजारुण-प्रभा-पूर मज्जद् -ब्रह्माण्ड-मण्डला ॥ ३ ॥

चम्पका-शोक-पुन्नाग सौगन्धिक-लसत्कचा ।
कुरुविन्द-मणि-श्रेणी कनत्कोटीर-मण्डिता ॥ ४ ॥

अष्टमी-चन्द्र-विभ्राज दलिक-स्थल-शोभिता ।
मुख-चन्द्र-कलङ्काभ मृग-नाभि-विशेषका ॥ ५ ॥

वदन-स्मर-माङ्गल्य गृह-तोरण-चिल्लिका ।
वक्त्र-लक्ष्मी-परीवाह चलन्मी-नाभ-लोचना ॥ ६ ॥

नव-चम्पक-पुष्पाभ नासा-दण्ड-विराजिता ।
तारा-कान्ति-तिरस्कारि नासा-भरण-भासुरा ॥ ७ ॥

कदम्ब-मञ्जरी-क्लृप्त कर्ण-पूर-मनोहरा ।
ताटङ्क-युगली-भूत तपनो-डुप-मण्डला ॥ ८ ॥

पद्म-राग-शिलादर्श परिभावि-कपोलभूः ।
नव-विद्रुम-बिम्बश्री न्यक्कारि-रदनच्छदा ॥ ९ ॥

शुद्ध-विद्याङ्कुरा-कार द्विज-पङ्क्ति-द्वयो-ज्ज्वला ।
कर्पूर-वीटिका-मोद-समाकर्षि-दिगन्तरा ॥ १० ॥

निज-सल्लाप-माधुर्य-विनिर्भ-र्त्सित-कच्छपी ।
मन्द-स्मित-प्रभापूर मज्जत्कामेश-मानसा ॥ ११ ॥

अना-कलित-सा-दृश्य चिबुकश्री-विराजिता ।
कामेश-बद्ध-माङ्गल्य सूत्र-शोभित-कन्धरा ॥ १२ ॥

कनकाङ्गद-केयूर कमनीय-भुजान्विता ।
रत्न-ग्रैवेय-चिन्ताक लोल-मुक्ता-फलान्विता ॥ १३ ॥

कामेश्वर-प्रेम-रत्न मणि-प्रति-पण-स्तनी ।
नाभ्या-लवाल-रोमालि लता-फल-कुचद्वयी ॥ १४ ॥

लक्ष्यरोम-लता-धारता समुन्नेय-मध्यमा ।
स्तन-भार-दल-न्मध्य पट्टबन्ध-वलित्रया ॥ १५ ॥

अरुणा-रुण-कौसुम्भ वस्त्र-भास्वत्-कटी-तटी ।
रत्न-किङ्किणिका-रम्य रशना-दाम-भूषिता ॥ १६ ॥

कामेश-ज्ञात-सौभाग्य मार्द-वोरु-द्वया-न्विता ।
माणिक्य-मुकुटाकार जानु-द्वय-विराजिता ॥ १७ ॥

इन्द्रगोप-परिक्षिप्त स्मर-तूणाभ-जङ्घिका ।
गूढ-गुल्फा कूर्म-पृष्ठ जयिष्णु-प्रपदा-न्विता ॥ १८ ॥

नख-दीधिति-संछन्न नमज्जन-तमो-गुणा ।
पद-द्वय-प्रभा-जाल पराकृत-सरो-रुहा ॥ १९ ॥

सिञ्जान-मणि-मञ्जीर मण्डित-श्री-पदाम्बुजा ।
मराली-मन्द-गमना महा-लावण्य-शेवधिः ॥ २० ॥

सर्वारुणाऽनव-द्याङ्गी सर्वा-भरण-भूषिता ।
शिव-कामेश्वरा-ङ्कस्था शिवा स्वाधीन-वल्लभा ॥ २१ ॥

सुमेरु-मध्य-शृङ्गस्था श्रीमन्नगर-नायिका ।
चिन्तामणि-गृहा-न्तस्था पञ्च-ब्रह्मा-सन-स्थिता ॥२२ ॥

महा-पद्मा-टवी-संस्था कदम्ब-वन-वासिनी ।
सुधा-सागर-मध्यस्था कामाक्षी काम-दायिनी ॥ २३ ॥

देवर्षि-गण-संघात स्तूयमा-नात्म-वैभवा ।
भण्डासुर-वधोद्युक्त शक्ति-सेना-समन्विता ॥ २४ ॥

